अहमेव सर्वस्येश्वरो भूयासमिति यः कामयेत स सर्वतोमुखेन यजेत । यथाऽऽह भगवान्बौधायनोऽपि पैङ्ग्यशाखाब्राह्मणवाक्यान्युदाहृतवान् 'देवासुरा ह यत्र महासंग्रामं संयेतिरे तद्ध शिबिरौशीनरो देवानां वरादसुराञ्जिगाय । तस्मा हेन्द्रो वरं ददौ । स होवाच शिबिर्नैष्ठ्य भयं न गच्छेदिति । तं वर्षिष्ठीयप्रस्थे सर्वतोमुखेन याजयांचकार । ततो ह वा एतच्छिबिं नैष्ठ्य भयं न गच्छति । य कामयेतानपजय्यं जयेदिति तं वर्षिष्ठीयप्रस्थे सर्वतोमुखेन याजयेत् । अनपजय्यमेव जयति' (बौ० श्रौ० १८ । ४०) इत्यादि । सोमार्थमेतत्कर्मेति भाष्यकृत । मध्ये गार्हपत्य इति वचनात्तदेताश्चतस्रः शाला अनुदिशं मापयन्ति । प्रचरन्ति प्राञ्चः प्रचरन्ति दक्षिणा प्रचरन्ति प्रत्यञ्च उदञ्चः प्रचरन्ति । तस्मात्मध्ये गार्हपत्यो भवति । प्रतिदिशं सौमिका विहाराः सदक्षिणा शालासु तिस्रासु । दक्षिणशालायां दक्षिणाग्निकल्पनम् । सर्वत्र देशभेदादृत्विग्भेदः । स्तोत्रभेदाच्छस्त्रभेदः । त्रिवृतादि प्रतिदिशं दिग्भेदाच्च । षडा हि(ग्नि)कान्येतान्यहानि द्वादशाहे दशरात्रकाणि । तस्माद्द्वादशाहधर्मा अहीनधर्माश्च प्रवर्तन्ते । तत्कर्म द्वादशाहवद्दीक्षाकालः शिशिरे दीक्षेरन् इत्यादिर्व्याख्यातः ।

अत्र बौधायनीये द्वैधसूत्रे विशेषः—'चिन्वीत सर्वतोमुखेऽग्निमिति बौधायनः । न चिन्वीतेति शालीकिः । अत्रो ह स्माऽऽह मौद्गल्यः पूर्वस्मिन्नेवाग्निचय इतरेषु सावित्राः स्युरिति । इत्येतदपि न कुर्यादित्याश्मरथिः' (बौ० श्रौ० २३ । १०) इति ।

अत्रेयं पद्धतिः—उक्तकाले प्रातरग्निहोत्रं हुत्वा सर्वतोमुखेन काठकाग्नियुक्तेन * द्वादशशतदक्षिणेन यक्ष्ये । अहमेव सर्वस्येश्वरो भूयासमिति संकल्पः । विश्रुतमसि । ततः सोमप्रवाकवरणम् । एक एव सोमप्रवाकः । स प्राह महादेवयज्वनः सोमो भविष्यति तत्र भवताऽऽर्त्विज्यं कर्तव्यम् । अथ प्रश्नः—क ऋत्विज इत्यादिनाऽहीनः सर्वतोमुखस्त्रिवृत् । पितृ[3]पस्थानान्तम् । एवं ब्रह्मणस्तृ(स्त्रि)वृति ब्रह्मत्वं कर्तव्यमिति । एवं हौत्रं कर्तव्यमिति । क इत्युक्ते सर्वतोमुखस्तृ(स्त्रि)वृत्क ऋत्विज इत्युक्ते नारायणशर्मादयः । का दक्षिणा इत्युक्ते द्वादशशतानि गा इति । तृ(त्रि)वृति हौत्रं गायत्रं कर्तव्यमिति स्वे(स्ये)न विधिना प्रवृत्तिः । चतुर्णां वरणमाश्रित्य प्रयोगः—पुनश्च यज्ञशर्मण इत्यादि पञ्चदश इति च विशेषः । उद्गातृवरणान्तं पुनश्च यज्ञशर्मण इत्यादि पुनश्च यज्ञशर्मण इत्यादि । सप्तदश आध्वर्यवमित्यादि पुनश्च यज्ञशर्मण इत्यादि एकविंश इति विशेषः । एवं प्रतिदिशि सोमप्रवाकवरणं कृत्वा समन्त्रकं वरणं कृत्वा मधुपर्कः । इतरेषामेवम् ।

* अथ केचित्प्रधानवीर्यासिन्धन्ति, सहस्रदक्षिणानि तानि ।

१ सर्मार्थे । २ सर्वतोमुखेन पाठः । ३ पितुप ।

सर्वेषामृत्विजां वरणमिति भाष्यकृत् । तस्मिन्पक्षे प्रागादिक्रमेण मधुपर्कस्तन्त्रेण देवतोपस्थानं तन्त्रेण ततो नान्दीश्राद्धम् । सावित्रमग्निं चेष्ये स्वर्गं लोकमवाप्नवानीति संकल्पः । शा[illegible] विहारकल्पनम्. शम्यामात्रेण (प्रमाणं) गार्हपत्यं परिलिख्य द्वादश (प्र)क्रमेण चतुर्विंशतिप्रक्रमेण वा दार्शिकीं वेदिं । प्रतिदिशं सौमिकविहाराः सह [illegible] र्यानाग्नीध्रीयाभि. सर्वासु दिक्षु पुरुषस्य दक्षिणहस्तभागे दक्षिणाग्निं मार्जालीयं च सव्यहस्तभागे प्रवर्ग्यादिशाग्नीध्रशामित्रोत्करचात्वालाः । गृहे दीक्षापक्षमाश्रित्य प्रयोगः—पक्षे एव दार्शिकवेदिचतुष्टयं कृत्वा समारूयजुरादिमन्त्रविहारप्रस्थापनान्तं कृत्वाऽप्रवृत्ते दीक्षापरिमाणे द्वादशेऽहनि पृथक् पृथगरण्योः समारोप्य य इहा यत्रस्यादिति विनिना गमनं यदि त्वहिर्दीक्षणीया तदा शर्कराणामुपकल्पने कृते—अरण्योः समारोपणं देवयजनाध्यवसानमग्निं मथित्वोपावरोह्य गार्हपत्ये निदधाति ।

प्रतिविहारं षोडशर्त्विजो भवन्ति । प्रतिविहारं पात्रभेद एष्टिकानां पाशुकानां सौमिकानां च । प्रतिविहरणादि सर्वं सौमिकं क्रियते औदवसानीयायाः प्रतिविहारं द्रव्यनिर्देशः । केचित्तन्त्रेणेति । प्रतिविहारं समारूयजुष्यपि स्वे स्वे स्थाने सोमपरिवे(पे)षणम् । समहोता पूर्वस्मिन विहारे प्रतिविहारं वा स्वे दक्षे सर्वत्राऽऽवर्तते सर्वविहारेषु संभवता युगपदनुष्ठानं दीक्षणीयायामस्याधानया[illegible] इत्यापस्तम्बमतिः । केचिदूह कुर्वन्ति । अग्निं गृह्णामि सुरथान्यो मयो भुवो य उद्यन्तमारोहन्ति सूर्यमह्ने । आदित्यमित्यादि स्वेष्वायतनेषु सर्नापया । इमा ओजमित्यादि । अग्नयो हव्यवाह इह तानावहत, ऊहपक्षे अनूहपक्षे च । दीक्षणीयः हविरिदमेषा सर्याति । अन्तराऽग्नी सर्वविहारेषु मन्त्र इह प्रजा० सकृदेवानूहन । इमे पितृणामन्तरो वाङ्कव्या पितृभ्य आ । तान्पूर्व इत्यादिवदनूहो वा । इदमहमग्निस्तन्त्रेण अनूहन पयस्वती चाग्ने व्रतपते० पूर्वस्मिन्विहारे । सर्वानग्नीनभिमन्त्र्य सकृदनूहन प्रणीताप्रणयनमविकारेण । ओ निर्वपन । अग्निर्होतारमित्यनूहन । अत्रानूहो वा चतुःशिखण्डा० भुमयो भूत्वा महिमानं पुषोषु ततो देवस्यो वर्धन्ते पयाःसि । यज्ञिया यज्ञान्० ईडेऽन्य.० इत्यनूहः । ऊर्णाम्रदूनि प्रथमानि स्योन देवेभ्यो जुष्टानि सदन( सदनेभ्य. )बर्हींषि । आज्यमसि भेदेन तत्र तत्र गत्वाऽवेक्षणमाज्य मन्त्रेण शक्यत्वात् । अद्भिराज्यमाज्येरापः० शार्कररिमान्यज्ञान्० शुक्राणि व शुक्रासु ज्योतींषि वो ज्योतिःषु आ द्विपु ये चूर्णपञ्चाना वो वाताना उत्तरेष्वदीत्यशब्दस्य व.शब्दः हवि.शब्दस्यानूहो वा सर्वं तद्देवाना को देवता(ना)मस्यः अग्निश्रेम बर्हिष्यन्त. पृथिव्या चतुःशिखण्डा युवतिः सुपेशसो युव(वसु)नानि वस्ते० कामे धुक्ष्व यजमानाय कामान् । शिवाश्च मे शग्माश्चैधि स्योनाश्च मे सुषदाश्च मे स्वोर्जे·

स्वत्वश्च मे वयस्वत्यश्च स्तोषमूर्जं मे पिन्वध्वं० उग्राम्यो ग्राहं० समभिभुवस्य० अभिभूय० यज्ञशब्देषु सर्वत्रानूह. । एषु यज्ञषु० केचित्तु—भाष्यविरुद्धमिति व्याचक्षते । अविलोपायेत्यनूहः । तेजिष्ठेत्यस्याभिधानादूहपक्षे—अवभृथवदूयुनज्मि वः जातवेदसः । इन्धाना वः वयं व. ये मे अग्नय एषा यज्ञाना ऋध्यात् अनुहो वा । तेजिष्ठा वः या वो अग्नय० व्यय-वं मा वो दभन् । विभूतीभिर्विशो यन्त्राभि· विशो यन्त्रानुदमाना अरातीन् सीदन्त्यो देवी. सुकृतस्य विभूतयः स्वनूतयः० मयि धारयत इमे व्रतम्तरा उभयस्य धर्तार विधर्तार प्रयाजानामुतानुयाजा० आरोहत पयो जुहव० जुहूस्थ घृताच्य गायत्र्यास्य कविभिर्जुषाणा· । अन्यथमाना यज्ञानन्उच्छ्वं समीच्यो यज्ञं नया स्थोपदेवानाग्नेयेन० उपभृद्भि० सपत्नान्० दोहैर्यज्ञान० सुभृदस्योपभृतो घृताच्य त्रैष्टुभेन छन्दसा विश्वेदम । उत्तरं पूर्ववत । अपरं ध्रुवाम्य 'ध्रुवा स्थ भरण्य० इत्यादि स्योना मे सीदन सुषदा पृथिव्या दिवि सीदत इमे स्रुवा अभिजिघ्रति होमाच्छतक्षरा० सर्वा यज्ञाना समजन्ति विष्ठा० इमा स्थाल्यो घृताना पूर्णा अच्छिन्नपयसा शतधारा उत्सा शेषं सवनीयवत् । आमन्त्राभिमन्त्रणं क्रमेण । चित्ति· स्रुगित्यविकारेण सकृदङ्गिरसो० एषां यज्ञाना० उच्छिष्य० इत्यनूहेन । अग्न्यन्त्यभिधानादि उहपक्षे—उच्छिष्मा अग्नयो यजमानायेष्टि निशुष्माऽभिदासते । अग्नयो देवेद्धा मन्विद्धा मन्द्रजिह्वा मर्त्यानां न होतारो ऊर्ध्वं० मीमद्धा अग्नय आहुता स्वाहाकृता० मनाम्य प्राजापत्यादिमसोभिर्माहुतैराविशत० वागस्यैन्द्री० सन्नान्वारम्भ· । केचिन्मुख्यस्यान्वारम्भमिच्छन्ति । विप्रतिषेधादत ओहेन वा– वाच स्यैन्द्र सपत्नक्षयण्या वाचामिन्द्रियेणाविशत । देवाः पितर० इत्यविकारेण । अग्नय इदमियत्राग्निभ्य इदं० वसन्तानृतूनां प्रीणामि ते मा प्रीताः प्रीणातु ग्रीष्मानृतूना प्रीणामि ते मा: प्रीता: प्रीणातु वर्षानृतूना प्रीणामीत्यविकारेण शरद ऋतूना प्रीणामि प्रीण( णातु )न्तु हेमन्तशिशिरावित्यविकारेण । एको ममैकेत्यविकारेण । आज्यभागानुमन्त्रणे विशेष —अग्नीषोमयोरहं देवयज्ययाभि: । केचिद्देवयज्यया( इति ) । केचिदग्नीषोमीयानामहं देवयज्ययाभिरिति । तथैव प्रधानानुमन्त्रणम् । अग्नयो मा दुरिष्टात्पातु सविताऽग्न ........ सुरूपाग्निन्पुरोडाशस्वर्णे इडादेवता परा ' सुरूपवर्षवर्णं० इत्यविकारेण । देवताभिधानात् । इडे भागं जुषध्वं जिन्वगा जिन्वार्वत: । तासां वो भक्षयमाणस्य० मार्जनं पूर्वस्मिन्विहारे यत्र चतुर्धाकरणं त्रेधाकरण वा तत्राऽऽवर्तेत आग्नीध्रभागान्तेमता वो अग्नयः समिधस्ताभिर्वर्धध्वं० इति प्रकृत्या वाऽयं ते अग्न इत्यनूह· । अग्न्यभिधानादथवा यं वो अग्नय अग्नयो न. जातवेदस अग्नयः संदहत० समहोता तन्त्रेण । वेदिर्बर्हिरित्यनूहः । केचिद्वेद्यो बर्हींषि श्रितानि हवीर्ष्यास्मा० आज्यानि० याज्या० बर्हि-

पामहं देव यज्ययाभि० वाजस्य मा प्रसवेनोद्ग्राभेणोदग्रभीषु० निग्राभेणाधरान्० सम-स्रन्ता बर्हीषि हविर्भिर्घृतेन० दिव्यमित्यादि उज्जितयो( र )विकारेण—एमा अग्मन्० मा मे सत्याऽसीत्यविकारेण रोहितेन वोऽग्नि० गमयन्तु हरिभ्यां वः इन्द्रमगमयतु एतश नव दिव सर्वाद्या अवतनान्० आह्वयन्थिनाः । तैः समस्तकाण्डैरोषधयो सो० वि ते मुञ्चामीत्यविकारेणापरिविमोकत्वात् । वि युष्माकं मुञ्चामि० इति वा धर्तादस्मासु० विष्णुना शयुनामह देवयज्ययाभिर्यज्ञेन० यज्ञा नमो वो यज्ञा नमो नमश्च वो यज्ञाः सतिष्ठध्व० ( सर्वत्र ) उप वो नम.० इष्टा यज्ञा ओहिन वा । भेदेन वा इष्टा यज्ञा द्रविणोदस आशीर्वन्तस्तेषा मेऽष्टाना० सोमानामहं देवयज्ययाभिः । इडाऽस्मानित्य-विकारेण । तेषामुपस्थानपक्षे भेदेनाऽनुमन्त्रण ( पक्षे ) यदि तन्त्रेण शक्यते ( पठितुं ) तदाऽप्येवमूह । यदि न शक्यते भेदेन द्वयोः संभवेत्तदा द्विवचनेनोहः । इडा-ऽस्माननुवस्ता घृतेर्यासा पदेषु वैश्वानर्य शाक्वर्यो यज्ञानस्थिता वैश्वदेव्य. । द्विवचनेन इडे ( अ )ऽऽस्मान्ययो पदयोर्वैश्वानर्यौ शाक्वर्यौ वावृधानोपयज्ञमास्थितौ वैश्वदेव्यौ । एव याजमानविधिः ॥

एवं दीक्षणीयादि सर्वत्र । एवं समस्थिता ध्रौवाज्यभागणं प्रकृतिवत् । उत्तरेण बर्हिः प्राग्वशमित्यादि । त्वमग्ने० अयासि च० इत्यन्तं पूर्वस्मिन्विहारे । आ वो देवास इत्यादि पूर्णाहुत्यन्त प्रतिविहारमावर्तते । यज्ञस्योद्यमनार्थत्वात् । दीक्षा आहुतयो यजमानसंस्कारार्थत्वात्कृष्णाजिनादिसर्वाहारप्रस्थापनान्तं पूर्वस्मिन्विहारे सर्वाहारप्रस्था-पनात्पूर्वं समन्वारम्भहोमः । अपेतमित्यादि द्वादशाहप्रकृतित्वात् । व्रतश्रपणादि पूर्वस्मि-न्विहारे ।

श्वोभूते सोमपरिवपणादि सर्वत्र प्रायणीयाकर्म । तत्र पूर्ववद्याजमानकृत्यम् । स्थाली-निधाने कृते सोमक्रय सर्वत्र शुण्ठ्या क्रयः । एकामिष इत्यादि सखायः सप्त पदा० इत्यन्त प्रतिविहारमावर्तते । तो ते राय इति मा हृ४० सं देवी चाऽऽवर्तते । त्विषी-मन्तस्त्वेत्यावर्तते । तत्र तत्र पदनिधान भेदेन पूर्वस्योत्तरतः दक्षिणस्य पुरस्तात् पश्चि-मस्य दक्षिणत उत्तरस्य पश्चादेवं गार्हपत्याहवनीययोः शीते भस्मनि—अपि पन्था० आवर्तते । गायत्र इति च सर्वत्र दिशाक्रमा एवं मुष्णीषं विसृज्य मैत्रावरुणाय प्रयच्छति, इतरेभ्यः प्रयच्छति । मित्रो न एही० इन्द्रस्योरु० उदायुषा० उर्वन्तरिक्षं० एकैकस्य कृत्वेतरेषामावर्तते । प्रच्यवस्व० इत्यादि प्रतिविहारमावर्तते । आतिथ्यायां पूर्ववद्या-जमानकर्मैकत्वात्पत्न्याः प्रतिविहारमन्वारम्भः । आतिथ्यायाः पूर्वस्यां शालायां व्रतदान, तानूनप्त्रग्रहणाभिमर्शनावघ्राणं प्रतिविहारमावर्तते । व्रतेष्वपि नयनपक्षे सर्वं संसृज्य पिबति, आप्यायननिह्नव ( योः ) प्रतिविहारमावर्तते । कृतेष्ववान्तरादि-

ष्ठोपायनं मदन्तीभिर्मार्जनं च पूर्वस्यामेव। प्रवर्ग्यसंभरणं पूर्वस्योत्तरस्य च द्वितीयतृतीययोरुक्थ्यत्वान्न प्रवर्ग्यः। प्रवर्ग्यपात्राणामपि भेदः। नमो वाचे० तन्त्रेण। तन्त्रसंभव इतरथा भेदेन मेथीनिधानकाले पूर्वस्या निधायोत्तरस्य अनाधृष्या० इत्यावर्तते। अपश्यं गोपा० नेत्यूहः। तन्त्रेण। केचिद्वीक्षणस्याशक्यत्वाद्भेदेनेति भाष्यकृत्। तस्मिन्पक्षे—अपश्यं गोपावनिपद्यमानाविति। अस्मिन्सर्वतोमुखे तन्त्रेण भेदेन पर्यायेणेति यदुक्तं तद्याजमानस्य। घर्मशेषभक्षणकाले संसृज्य पूर्वस्मिन्नेव भक्षणं—हुतः हविः० यदि हुतानि हवींषि पितरौ न स्थो मा मा हिंसिष्ट। केचिदूहन—हवींषि पितरौ न स्थो मा मा हिंसिष्टं०। अस्याम वो देवौ घर्मौ मधुमतः० इत्यविकारेण कर्तृवादत्वात्। अशीमहि त्वा मा मा हिंसीः। आपो हि ष्ठा० मार्जनं पूर्वस्मिन्विहारे मदन्तीभिर्मार्जनं च उत्तरशान्तिस्तन्त्रेण, तन्त्रसंभव उत्तरत भेदेनोपसदि याजमानं क्लृप्तः पूर्ववज्जपो पौर्वाह्णिकस्य प्रचर्ये वेदिकरणाद्यभिमन्त्रणं चतुःशिखण्डा० उत्तरवेदिदेशस्य मध्ये शङ्कुमित्यादि शर्कराभिरिति बाह्यलेखापूरणान्तमापराह्णिक्यौ प्रचर्योपसदौ।

श्वोभूते पौर्वाह्णिकीभ्यां प्रचर्य प्रजापतिस्त्वेत्यादिकाठकविषयः। संचितोक्थ्येन होताऽनुशंसति इत्यन्तं कृत्वाऽऽपराह्णिक्यौ प्रवर्ग्योपसदौ उपसीद सर्वत्र द्वादशाहवत्। संभारयजूंषि व्याचष्टे।

यूपच्छेदनकाले— अग्निषु प्रथमं चतुरो यूपान्मन्त्रेण छिनत्ति, प्रतिविहारमेकैकं प्रतिविहारमुपशयपात्नीवतयोर्भेदः। ततो द्वादशाह औपवसथ्येऽहनि पौर्वाह्णिकीभ्या प्रचर्य तदानीमेवाऽऽपराह्णीकीभ्यामित्यादिप्रवर्ग्योद्वासनकाले-उच्छिष्टखर इत्यादि—अजामग्नीध इत्यादि इमम् षु० इत्यन्तं पूर्वस्य कृत्वोत्तरस्य कृत्वा नात्रोच्छिष्टखरं, मार्जनं यजमानपत्न्योः। उदु त्यं० चित्रं० इत्यादि।

केचित्प्रतिविहारं प्रवर्ग्योद्वासनं च कुर्वन्ति। [illegible] कृत्वा काले इतरः सर्वत्र विधिः। केचिदुत्तरस्य काठकपक्षे सावित्रो नेष्यते पक्षे षोडशीति प्रतिषेधादिति।

अथ [illegible] इत्यन्तम्। तत आग्निष्टोमिकमग्निवत्युत्तरमित्यादि (प्रतिपक्षाञ्जनमावर्तते)। यस्योरुष्विति च यजमानस्य। केचित्पूर्वस्मिन्नेवेति, संस्कारत्वात्। उपरवं प्रतिविहारमावर्तते। अथाग्नीषोमीयपशौ याजमानान्यावर्तन्ते। त्रिवृत्पलाशे० औहेन वा। ऊहपक्षे इतरथा भेदेन इतराण्यैष्टिकानि पूर्ववत्। प्रैतु ब्रह्मणस्पत्नी० इत्यादि वैश्वानरं ज्योतिः० इत्यन्त पूर्वस्य कृत्वा, एवमितरेषामावृत्तिः। अवान्तरदी-

१ यूपास्तन्त्रेण।

क्षाविसर्ग उत्तर(स्मिन्)विहारे मुष्टिविसर्गश्च । आपो देवी० इत्याद्यैष्टिकं यूपसंमानकाले अग्निष्ठं पूर्वस्य तस्योत्तरदक्षिणस्योत्तर पश्चिमस्य तस्योत्तरं दक्षिणस्योत्तर पश्चिमस्य तस्योत्तरस्येति प्राधान्यवादः । ऐकादशिनेन सर्वत्रोपशयनीयादि परिश्रयणान्तं पूर्वस्य कृत्वा क्रमेणेतरेषाम् । केचिद्यूपसंमार्जनकाले एकादश यूपान्विभज्य च त्रिरात्रवत्प्रतिविहारमिन्वन्ति, (ऋत्विग्व-रणकाले पूर्वस्मिन्नेव याजमानवरणम् ।) जुष्टो वाचो भूयासं० ऋचा स्तोम०[1] प्रति विहारमावर्तते याजमानम् । ऐन्द्राग्नियज्ञपतिं० इत्यादि पराद्यावर्तते । यजमान इत्येकस्य कृत्वा क्रमेणेतरेषाम् । यामा सृष्ट० इत्यावर्तते । मित्ररूपेतरेति भेदेन यजमानः— नमस्त आतान० सकृदनर्वा प्रेहि० । इत्यादि पत्नीकार्यमेकस्य कृत्वा, इतरेषां यजमा-नस्य वपाश्रपण्यन्वारम्भ आवर्तते । आपो देवी शुद्धायुव० आपो हि ष्ठा० इत्यादि-भिर्मार्जनं च यजमानपत्न्योः पूर्वस्यैव सुब्रह्मण्य पितापुत्रीयादीनि क्रमेण मन्त्रकाण्डाह्वानं यजमानपत्न्योरन्वारम्भस्य विद्यमानत्वात् । पूर्ववत्सुब्रह्मण्यन्वारम्भादि । पशुपुरोडाशा-द्ययागेष्वैष्टिकत्वे याजमानं ( पूर्ववत् ) । वसतीवरीपरिहरणकाले क्रमेण वेद्यामासादनं यजमानपत्न्योः । रात्रौ ग्रहे विशेष -त्र्यम्ब-शाः स्थ तन्तूनां पवित्रे महाऽऽगच्छत । शिवा इमा रजवोऽभिधान्यग्निर्योप सेवताम । अयक्ष्मा व प्रजाभिः सःसृजामि० योऽश्मान्यज्ञान० कल्पशाग्रतर्विल्वान० दोहयाजमानानि तन्त्रसंभव इतरथा भेदन । सर्वत्र परिस्तरणान्तम् ।

महारात्रे वृद्भ्वेत्यादित्रिवृदग्निष्टोम —आग्नेयमेकं वा । अतिग्राह्यपात्रं प्रयुनक्ति । पञ्चदशेन्द्रमेकम । सप्तदशसौर्यमेकम । त्रीणि षोडशिपक्षे । उक्थ्यपक्षे न त्वतिग्राह्याः । सवनीयपशूना पात्रसादनकाले पञ्चदशादिषु मैत्रावरुणदण्डभेदोऽग्नीषोमीये च अग्नी-षोमीयकालेऽन्यतरच्छित्त्वा प्रयोग । पन्नेजनीग्रहणं पूर्वस्मिन्नेव । वसतीवरीनुप्रवेशनं क्रमेणैव । निग्राभ्यास्थ० वाचनं क्रमेण । प्रावित्र स यजमान० इत्यादिविसर्गमति धारत्यन्तं क्रमेण । त्रिवृदैन्द्रवायवाग्र । पञ्चदश शुक्राग्र । सप्तदश आग्रयणाग्र । एकविंश ऐन्द्रवायवाग्र । प्रष्टेवेशनग्रहाग्रता पञ्चहोताभिमर्शनमावर्तते प्र(ष्टो)होमाभिप्य(प)वमा-नस्य स्तुतस्येत्यन्तमेकस्य कृत्वेतरेषा विरा० न० इत्याद्यावर्तन्ते अत्र पशुकाले ( त्रिवृत )मारस्वतमेषी । तस्यातिरात्रवत्कल्प । उपशयनिर्देश. । एवं पशोर्वपा-मार्जनान्तम् ।

केचिदेकादशिनान्सर्वान्वा प्रायणेनाश्वत्र वा द्विभज्योपाकुर्वन्ति । एष विधिः पूर्वस्य । द्वाविंतरेषाम् । त्र्यस्त्र्य. । केचित्कापयानिवोपाकुर्वन्ति । अथवा क्रतुपशून्वा

१ स्यतामि० । २ उपोद्रातादिऋत्विग्वरणकाल । ३ द्वौ द्वावितरेषामिति पाठः ।

यथा सत्स्थमाश्लायनमतात् । अथवा बौधायनमतादाग्नेयं वा । सर्वत्र प्रतिविहारं द्वादशाहे तथोक्तत्वाद्बौधायनमतेन । मार्जनान्ते प्रातःसवनीय सप्तसर्पन्तीत्यादि आगन्ता० वितार ० इत्यन्तमेकस्य कृत्वा, इतरेषाम्—उपमा द्यावापृथिवी० इहे स्थः० इत्यादि । सूर्य वायुमग्निं यम सरस्वतीं च सकृदितरवत्सर्वेषु कुर्वन्ति । आसन्नाभिमर्शनं, क्रमेण द्विदेवत्यकाले सकृदेवाऽऽदित्योपस्थानम् । केचित्सर्वत्र शुक्रान्वारम्भ आवर्तते, इन्द्रेण मन्युना० इत्यादि । इडान्वारम्भ आवर्तते । इडाभक्षणं पूर्ववत् । तत्र गच्छति सत्य आग्नीध्राय भक्षानाहरति । सह शालायामेवेति बौधायनवचनात् । एवं भक्षणं सर्वत्र यजमानचमसाध्वर्यव पूर्वस्मिन्विहारे स्थिताय यजमानाय भक्षान्वाऽऽहरन्ति । सर्वानेकस्मिन्पात्रे आनीय तन्त्रेण भक्षणम् । तन्त्रसंभवे, इतरथा भेदेन । तन्त्रेणाप्यन्यस्थ एव भक्षयति यजमानः । पत्नीजनी सादयति । पूर्वस्मिन्नेव स्तोत्रोपाकरणप्रभृति–स्तुतस्य० इत्यन्तं प्रतिविहारमावर्तते । उपगानार्थमिति तत्राऽऽसीनस्य विहितत्वात् । तस्मादिडायै हिङ्कुर्वित्यादि नाऽऽवृत्तिः । स्तुतस्य स्तुतमसि० इत्यावृत्तिः, शस्त्रमिति च । आज्यमरुत्वतीयैवंपदेवान्त तन्त्रेणोहेन शस्त्राणां शस्त्राणि अस्योर्जं महः शस्त्राणि दुहा मा मा शस्त्राणां शस्त्राणि गम्यासिन्द्रियावन्त० इति विकारेण मा मे सन्त्याशी० इति च यज्ञा बभूवुस्ते जज्ञिरे ते वावृधिरे ते देवानामधिपतयो बभूवुः । ते अस्मान् अधिपतीन्कुर्वन्तु० इत्यादि । केचिदविकारेणैवमितरेषु शस्त्रेषु । एकवचनेन बहुवचनेन वा तन्त्रसंभवे इतरथा भेदेन—स्तुतस्य स्तुतमसि० ऊहःसे पूर्ववद्द्रष्टव्यम् । एवं सर्वत्र स्तोत्रेषु शस्त्रेषु च ।

माध्यंदिनस्याभिषवादि विष्णो त्वं न० इत्यन्तं पूर्ववत् । दधिघर्मभक्षणं तन्त्रेण तन्त्रसंभवे इतरथा भेदेन । तन्त्रपक्षेऽप्यनूहः, भक्षाभिवायकत्वान्मन्त्रस्य । मरुत्वतीया-सादनात्पूर्वं प्रचरण्या ( स्रु ) विगृहीतमित्यादि । यजमानस्य नीतानुमन्त्रणान्ते पूर्वस्य हुत्वा पश्चादितरेषाम् । सर्वत्र द्वादशाहे ऋत्विग्भ्य अत्र पूजनं च पृथक्पृथक् । न पृथगिति भाष्यकृत । विषाणाविसर्जनं स्नानमुत्करे चात्वाले वा । मरुत्वतीयाभ्यामित्यादि । अतिग्राह्यकाले गृहीतानामेव होमः, शेषं पूर्ववत् ।

अथ तृतीयसवनीयाजमानानि । आदित्यारम्भ आवर्तते । सर्वत्रातिग्राह्यवचनेन क्रमेणाशिरावनयनं क्रमेण सन्ततप्रभृतिहोत्रचमसान्वारम्भ क्रमेण, पञ्चहोत्रमहाव्रकाशश्रुत-स्त्वमित्यन्तं प्रतिविहारं, [illegible] । विष्णो त्वं न० इत्युपस्थानान्तं प्रातःसव-नवत् शृतं हविः३ शमित० इति । आ नाराशंससादनात्पूर्ववत् । तत्र शुक्रान्वा-रम्भः । पिण्डप्रदानमावर्तते । पङ्क्तौ प्रजापते न त्वदेतानि० च तन्त्रेण भेदेन वा ।

१ हुत्वा । २ प्रातर्दना द्वादशशतानि गावो दक्षिणा ।

वासमद्य० इत्यादि । पत्नीजनीनयन, पूर्वस्मिन्विहारे त्रिवृदग्निष्टोमसंस्थात्वं, पञ्चदश उक्थ्यः संस्थात्वं, एकविंश. षोडशी संस्थात्व, उक्थ्या वा द्वादशाहे—येऽन्तरेष्टावुक्थ्या इति । ( यथा संसूर्याः सूर्यामीति ) तन्त्रेणाऽऽयुरिन्द्रियमावर्तते । केचित्तन्त्रेण । केचित्—यज्ञा आगच्छन्त्विति षोडशीग्रहहोमान्त, अग्नीदोपयजानित्यादि यज्ञपुच्छं सर्वत्र ।

तत्र याजमानानि—बर्हिषामह देवयज्यामित्यादि हारियोजनभक्षणमावर्तते । तन्त्रेण वा अप्सु धौतस्य पूर्वस्मिन्विहारे । केचिदावर्तते । दधिद्रप्सभक्षणम् । भेदेन शूलोद्वासनादि, समिदाधानमावर्तते । उत्कर्षपक्षेऽनुत्कर्षपक्षे च विष्णुवनिक्रमणादि । समहं प्रजया० इत्यन्तं पूर्वस्मिन्नेव समिद्धो अग्न० वसुमान्० यो न० सपत्न० इत्यावर्तते । अग्ने गृहपत० इति सकृत् । अग्ने वह्नि० इत्यावर्तते । ज्योतिषे तन्तव० इत्यादि सोमरुजपान्त पूर्वस्मिन्नेव यूपोपस्थान भेदेन ।

अग्निना देवेनेत्यादि जागतविष्णुक्रम पूर्वस्मिन्नेव । केचित्प्रतिविहारमिच्छन्ति । इन्द्रेण मयुजो वय० इत्यावर्तते ।

अवभृथादिसर्वत्राप्सुप्रचारस्तन्त्रेणैकस्मिन् । अपाम सोममित्यादि तन्त्रेणाऽऽसमिदाधानान्तमुपस्थान च । भदन्तोदयनीयादि सर्वत्रानूबन्ध्यावपाहोमे कृते प्रतिविहारं पात्नीवतकर्म । अनूबन्ध्या समाप्य पयस्या वा सदसो हविर्धानस्य, इत्यादि यत्कुर्वीत तद्धमानुमन्त्रण तमावर्तते । अय नो नभसा० स त्वं नः० इत्युत्तरविहारार्थस्यैव ।

केचित् अयं न० इत्येकं प्रतिविहारं ये देवा० वेदमुपस्थ आधायेत्यादिब्राह्मणतर्पणान्तमुत्तरस्मिन् । केचित्—पूर्वस्मिन्नेवेति । सोमरुजपादिवृष्टयन्त सर्वत्र ( स्व ) सिद्धान्त. ।

अथ प्राजहितं समारोप्य, उदमून० इत्यवसाय मध्ये गार्हपत्य इत्यादिदार्शिकषदिचतुष्टयं विहृत्यान्वाधानादि—उदवसानीया । तत्स्थाने पूर्णाहुतिर्वा । केचिदेकमेव विहारं कुर्वन्ति । तस्मिन्पक्षे उदवसानीया पूर्णाहुतिः प्रतिदिश सौमिकविहार इति वचनात् । समाप्त. सर्वतोमुखः ।

ततः परेद्युरागामिपर्वणि वा सौत्रामणी मैत्रावरुणी वा । दिङ्मात्रमस्माभिरुक्तमन्यथोक्तं प्रमादाद्वा तत्र प्रयोगविशारदैः शान्तमनस्कैस्तत्परीक्ष्य समावेयम् । वैकृतेषु कर्मसु यावत्संभवेत्तावद्याजमानं तथाऽन्यानि कर्माणि भवन्ति (भ० श्रौ० २२।७।२१) इति भरद्वाजवचनादेव सिद्ध भवति ॥

अथ सप्तदशप्रश्नेऽष्टम पटल ।

---

अथ षडहमाह—

साध्यानां षडहेन सुवर्गकामः ॥ १ ॥

साध्यशब्दो देवगणविशेषवाची । अत्र सर्वत्र दर्शन शास्त्रीयनिश्चय. । यद्यप्ययं द्वात्रोऽहीनत्वाद्यजतिचोदनाविषयस्तथाऽप्यत्र केषाचित्सारस्वतसत्रधर्माणा सद्भावमभि· त्य विद्वांस आसत (तै० स० ७–२–१) इत्यादिचोदनया विहित· । ते च धर्मा ाश्वत्थी हविर्धानम् ( स० श्रौ० १७–८–४ ) इत्यादिना वक्ष्यन्ते ॥ १ ॥

एतमेव सत्रत्वोपचारमभिप्रेत्य प्रशमति—

पृष्ठ्यः षडहः ॥ २ ॥

भवतीति शेषः । सत्ररूपे द्वादशाहे य पृष्ठ्य षडहस्तास्मिन षट्सु दिनेषु यानि स्तोत्राणि रथंतरबृहद्वैरूपवैराजशाक्वररैवताख्ये ... एतान्यत्रापि ट्सु दिनेषु क्रमेण भवन्तीत्यर्थ. ॥ २ ॥

एतेषु षट्सु पृष्ठस्तोत्रेषु प्रथमद्वितीययोरह्नोरनुष्ठेये रथतरबृहत्पृष्ठे ये स्तोत्रे ते विशे· गाऽऽह—

बृहद्रथंतराभ्यां यन्ति ॥ ३ ॥

शब्दशास्त्रप्रोक्त एवात्र बृहच्छब्दस्य पूर्वनिपात । अनुष्ठान तु रथंतरस्यैव प्रथमम् । न्ति स्तोत्रमनुतिष्ठेयुरित्यर्थ. ॥ ३ ॥

आश्वत्थी हविर्धानं चाऽऽग्नीध्रं च भवतः ॥ ४ ॥

ये यजमाना: सदोहविर्धानाभ्या मण्डपाभ्या युक्ता सत्रे प्रवर्तन्ते तेषा हविर्धा- माग्नीध्रं चेति ... भवतोऽश्वत्थकाष्ठनिर्मिते उभे कार्ये । तत्रा ... र्गमासनमिति भाव ॥ ४ ॥

धर्मान्तरमाह—

चक्रीवती भवतः ॥ ५ ॥

यथा रथस्य शकटस्य वा चक्र तथा चक्र ययोराग्नीध्रहविर्धानमण्डपयोस्ते चक्री- ती । अयमर्थः—चक्रयोरक्षं प्रक्षिप्य शकटाकार कृत्वा तस्योपरि फलकान्यास्तीर्य षामुपरि भूमाविव मण्डपं निर्मातव्यमिति ॥ ५ ॥

धर्मान्तरमाह—

उलूखलबुध्नो यूपो भवति ॥ ६ ॥

यथा काष्ठमयस्योलूखलस्य मूलमतिस्थूल भवति तथा यूपमूल कर्तव्यम् ॥ ६ ॥

धर्मान्तरमाह—

**प्राञ्चो यान्ति ॥ ७ ॥**

चक्रयुक्ताग्नीध्रादिभि सह प्राङ्मुखा गच्छेयुः । स्वर्गलोकस्य प्राग्वर्तित्वेन प्रतिभानात् (७।२।१) । एतच्चोक्तमापस्तम्बेन—तस्मिन्संस्थितेऽध्वर्युः शम्यां प्राचः प्रास्यति स यत्र निपतति तद्गार्हपत्यं तस्मिन्षट्त्रिंशतं प्राचः प्रक्रमान्प्रक्रामति तदाहवनीयः । चक्रीवन्ति सदोहविर्धानान्याग्नीध्रं चाऽऽश्वत्थी हविर्धानमाग्नीध्रं चोलूखलबुध्नो यूप [illegible] एव नोपरवान्खनन्ति (आप० श्रौ० २२।१२।४) इति । एकस्मिन्नह्नि समाप्ते सति परेद्युः प्रातः शम्याक्षेपमात्रं गत्वा तत्राहरन्तरमनुष्ठाय तस्मिन्नपि समाप्ते ततः परेद्युरपि तथेत्यर्थः ॥ ७ ॥

**सरस्वत्या यान्ति । आक्रोशन्तो यान्ति ॥ ८ ॥**

या सरस्वत्याख्या नदी तया सह तत्तीरे प्रतिदिनं गच्छेयुः । उत्साहातिशयेन क्रियमाण उच्चतमो ध्वनिराक्रोशस्तं कुर्वन्तो गच्छेयुः ॥ ८ ॥

एवमनुष्ठिते कालावधिरूपं धर्मान्तरं विवक्ते—

**यदा दशशतं कुर्वन्त्यथैकमुत्थानम् ॥ ९ ॥**

एकेन वृषभेण सहिता दश गावो यावति कालेऽपत्यप्रसवेन गवां शतं संपादयन्ति तावन्तं कालं पौनःपुन्येनानुष्ठाय तदनुष्ठानादुत्थानं कर्तव्यमनुष्ठानं संपादयेदित्यर्थः । सोऽयमेकः समाप्तिकालः ॥ ९ ॥

कालावधौ पक्षान्तरमाह—

**यदा शतꣳ सहस्रं कुर्वन्त्यथैकमुत्थानम् ॥ १० ॥**

शतं गावो यदा पूर्ववत्सहस्रं संपादयन्ति सोऽयमेक उत्थानकालः । न चातीतपक्षेण साङ्कर्यं शङ्कनीयम् । प्रसववैचित्र्येण न्यूनातिरेकसंभवात् ॥ १० ॥

कालावधावेवापरं पक्षद्वयमाह—

**यदैषां प्रमीयेत । यदा वा जीयेरन् । अथैकमुत्थानम् ॥ ११ ॥**

एषां यजमानानां मध्ये कश्चिद्यदा प्रमीयेत सोऽयमेक उत्थानकालः । यदा वा राष्ट्रक्षोभादिना शत्रुभिरेते यजमाना जिता अपहृतसर्वस्वा भवन्ति सोऽयमेक उत्थानकालः । तस्मात्तत्पर्यन्तं षडहात्र आवर्तनीय इत्यर्थः ।

केचिच्चत्वारः षडहा निकायिनस्तैत्तिरीयके आम्नाताः । ताण्डिना विस्तारेणाऽऽम्नाताः । आपस्तम्बेनापि त्रिषु सारस्वतेषु वैश्वसृजोऽग्निं चिन्वीत इत्यत्र भाष्यकारेण साध्याना षडहे वैश्वसृजस्य निवृत्तिरित्युक्तम् ।

तस्मात्सारस्वत इति गम्यते । सारस्वते ये धर्मा इहानुक्ता अप्यस्मिन्नुपसंहर्तव्याः । तस्य प्रयोग उच्यते—अस्मिन्कर्मणि बहुयजमाना द्वादशाहवदारम्भकाले सरस्वतीजघनोदके समुद्रसंगमे गोष्ठे वा षडहेन यक्ष्यामहे स्वर्गं लोकमाप्नवाम । विद्युदादि नाग्निचयनं न काठकः सक्षेदान्तं कृत्वा दश दश भागर्ष( गाव ऋप )भ एकश्चोपकल्पन्ते । द्वादश दीक्षा द्वादशोपसदश्च कृत्वा यूपकाल एक एव नैकादशिनाः । उलूखलबुध्नो यूपो भवति, इति श्रुतेश्च । आश्वत्थी हविर्धाने चाऽऽग्नीध्रं चेति । अश्वत्थकाष्ठेन रथाकृतिवद्धविर्धानकरण तथैवाऽऽग्नीध्रमण्डपमितिच्छन्दोगवचनाच्च । सदश्च पत्नीशाला च येन केनाचित्काष्ठेनाऽऽश्वत्थेन वा कृते भवत । सदोहविर्धानादीनामुक्तानां चक्रवत्त्वं प्राग्वंशकरणकाल एव करोति । अभस्तात्फलका[न्या]स्तीर्णा [नि] भवन्ति, तस्योपरि विहारकल्पनं, बहुमृत्तिका प्रमार्ये । एवमुत्तरवेद्यामार्गीध्रीयमार्जालीयधिष्णियादिषु शामित्रदेशेऽपि मण्डलाकार इति च्छन्दोगवचनात् ।

केचिदेवं वर्णयन्ति—एवं हविर्धानादीन् ... न फलकास्तरणं भूम्यामेव विहारकल्पनम् । तस्य च लिङ्गं पांसून्हरेयुः । तथोत्तरवेदिधिष्णियेभ्यश्चकवता निवेद्य (श्य) यथायतनं निर्वपेयुरिति । उलूखलबुध्नो यूप इति वचनादैकादशिनानां निवृत्तिः । हविर्धानकाल उक्तप्रकारं करोतीति । शामित्रं च तथैवात्रापि नोपरवान्खनन्ति आलेखमात्रमेव परिलिखितमिति च्छन्दोगवचनात् । यूपोच्छ्रयणकाले धत्ते शिल्प इति । पृथिव्यै त्वेति प्रोक्षणम् । अपां सर्वासां समाप्तिः, न शुन्धनाम् । न यवोऽसि, नावस्तरणं यूपाञ्जनं कर्तव्यम् । उदिति ... । अग्नीषोमीय विधाय वसतीवरीं परिहृत्य पयसा विशसनं कृत्वा महारात्र इत्यादित्रिवृदग्निष्टोमसमुपगानि । पाशि(र्छि)कस्य प्रथम तथैवाभिग्राह्याः । पशुकाल आग्नेयमुपाकरोति । नोपशय उद्भ्रामनं दक्षिणा च । पत्नीसंयाजान्तम् ।

अध्वर्युः शम्यां प्राचः प्रास्यति शालामुखीयस्यान्ते ललाटिकप्रदेशे सा यत्र निपतति तद्गार्हपत्यः । अग्निष्ठेऽनसि व्रीह्यादीन्यज्ञायोनारोप्य प्रकर्षयति । पत्नीशाला च हविर्धानं चाऽऽग्नीध्रं च सदश्च मार्जालीयं च शामित्रं च प्रकर्षयति । रथचक्रमपि प्रकर्षयति । यत्र शम्या निपतति स शालामुखीयदेशः तस्मिन् प्राग्वंशं स्थापयति यथा शालामुखीयदेशे ... संभवति । अत. षट्त्रिंशत्प्रक्रम उत्तरवेदिस्थानं तस्मिन्यथोत्तरवेदिर्भवति तथा हविर्धानं प्रकर्षयति । उत्तरवेदिधिष्णियादीनां पांसूनाहृत्य यथायतने निवपेयुः । आसन्द्यादीन् विसृ(स्र)स्य तान्यथास्थानं पर्यायेण तनोति । अग्नीनामग्निवत्प्रत्यसनयनं सर्वेषां ( सर्वान् )केचित्समारोप्येति । चात्वालान्मृत्तिकामानीय चात्वालदेश उपरवदेशे च मन्त्रैर्लेखामात्रं करोति ।

अग्नीन्यथायतनं विहृत्य पयसा विशसनं कृत्वा श्वोभूते पञ्चदश उक्थ्य. ।

शुक्राग्रः पशुकाले यूपस्योत्तरभाग ऐन्द्रमुपाकरोति । अथ सारस्वतमेकयूपे । कापेयाना-मुपाकरणे प्राप्त यथापाठमेवोपाकरोति । पत्नीसंयाजान्तमहीनसंततयः ।

श्वोभूते सप्तदश उक्थ्यः । पाष्ठि(ष्ठि)कस्य तृतीयः । तथैवातिग्राह्यः । आग्रयणाग्रः । पशुकाल उत्तरत एव सौम्यं पौष्णं च पूर्ववद्दक्षिणा पत्नीसंयाजान्तमहीनसंतत्यन्तं पूर्ववत् ।

श्वोभूत एकविंश षोडशी । षोडशिवत्वेन क्रतुकरणम् । ऐन्द्रवायवाग्रग्रयोऽतिग्राह्याः । पशुकाल उत्तरतो बार्हस्पत्य पूर्ववत्पत्नीसंयाजान्तम् ।

श्वोभूते त्रिणव उक्थ्य. शुक्राग्र । पशुकाले दक्षिणत. सावित्रं वैश्वदेवं च दक्षि-णादिकं पूर्ववत् ।

श्वोभूते त्रयस्त्रिंश उक्थ्य. । न त्वतिग्राह्या. । दक्षिणादि ब्रूयुः । अथ वा यजमा-नामन्यमरणे च : . ., ' दृस्वत्वणे(तमादाय)गच्छन्ति ( एवं षडहमावर्तमाना यज-माना न गच्छन्ति प्रतिस्रोत )। शम्याप्रासनं तदुपोत्थानमित्यादि । ततः सौत्रामणी मैत्रावरुणी वा ॥ ११ ॥

ऋतूनां षडहेन सुवर्गकामः ॥ १२ ॥

यजेतेति शेष । ऋतूना द्वितीयेन प्रजाकाम ( २२–२२–४ ) इत्यापस्तम्बः । अयतूना षडह सर्व पूर्ववत् । सरस्वतीसंबन्धवर्जमुत्तरेषु त्रिषु केचिदिच्छन्ति । द्वादशा-हवदौपवसथ्यान्तम् । पशुकाले कापेयाना प्रथम. ॥ १२ ॥

पृष्ठ्यः षडहेन ॥ १३ ॥

सुवर्गकाम प्रजाकामो वा यजेत । सकल्पाद्योपवसथ्यान्त पूर्ववत् । द्वौ द्वावुत्तरेषु पञ्चसु स्यन्त्यामेन यूपैकादशिनी चेतरथा पूर्ववत् ॥ १३ ॥

देवानामुपरिष्टात्त्रिकद्रुकेण सर्वमायुरेति वसीयान भवति ॥ १४ ॥

सारस्वतपक्षे तृतीय उपरिष्टात्त्रिकद्रुकेण षडात्रेण यक्ष्ये सर्वकामार्थमायुष्कामार्थं वा । पूर्ववदहर्योगविशेषः ॥ १४ ॥

त्रिवृदग्निष्टोमः पञ्चदश उक्थ्यः सप्तदश उक्थ्य आयुर्गोज्योतिरतिरात्रः सत्रसंमितेनाऽऽद्यं प्रजां पशूनोजो वीर्यमाप्नोति । अभ्यासङ्ग्यः पञ्चाहो विश्वजिदतिरात्रः ॥ १५ ॥

त्रिवृदग्निष्टोम प्रथमः । पञ्चदश उक्थ्यो द्वितीयः । सप्तदश उक्थ्यस्तृतीयः । ज्योतिश्चतुर्थ. । अग्नीषोमीय उक्थ्यो वा । तत्रापि षोडशि(शी)। अथ गौरथाऽऽयुरति-

रात्रः । शिष्टं सर्वं पूर्ववत् । ज्योतिरादीनामपि पत्नीसंयाजान्तं, नातिदेशोऽपि अभ्यासङ्ख्य. पञ्चाहो विश्वजिदतिरात्रः । गतः । शेषं सर्वं पूर्ववत् । ततः सौत्रामणी मैत्रावरुणी वा ॥ १९ ॥

अथ सप्तरात्रोऽभिधीयते—

**कौसुरुविन्देन सप्तरात्रेण पशवस्तानेवावरुन्धे ।**
**पञ्च पृष्ठ्याहानि । पञ्चविंशोऽग्निष्टोमो महाव्रतवान्विश्वजित्सर्वपृष्ठोऽतिरात्रः ॥ १६ ॥**

कौसुरुबिन्देन सप्तरात्रेण यक्ष्ये पशुमान्स्यामिति । सर्वं द्वादशाहवत् । औपवसथ्यान्तं कृत्वा वसतीवरीः परिहृत्य परसा विशसनं कृत्वा महारात्रे बुद्ध्वा त्रिवृदग्निष्टोमः पाक्षि(ष्ठि)कस्य प्रथम । ऐन्द्रवायवाग्र. । अग्निष्ठ आग्नेय. पशु । पत्नीसंयाजान्तम् ।

श्वोभूते पञ्चदश· पाक्षि(ष्ठि)कस्य द्वितीयः । शुक्राग्रः । अग्निष्ठस्योत्तरत ऐन्द्रम् । अथोपशयः । पत्नीसंयाजान्तम् ।

श्वोभूते सप्तदश उक्थ्यः पाक्षि(ष्ठि)कस्य तृतीयः । आग्रयणाग्रः । अग्निष्ठस्य दक्षिणत ऐन्द्राग्नः । अथोपशयः । पत्नीसयाजान्तमहीनसंततयः ।

श्वोभूत एकविंश उक्थ्य. । पाक्षि(ष्ठि)कस्य चतुर्थः । अत्र षोडशी । ऐन्द्रवायवाग्रः । अग्निष्ठस्योत्तरतस्तृतीये सारस्वतं दक्षिणतस्तृतीये सावित्रमथोपशयः । पत्नीसंयाजान्तमहीनसंततय· ।

श्वोभूते त्रिणव उक्थ्य. शुक्राग्र. । पशुकालेऽग्निष्ठप्रभृति उत्तरतश्चतुर्थे सौम्यं दक्षिणतश्चतुर्थे वैश्वदेवमथोपशयः पत्नीसंयाजान्तम् ।

श्वोभूते पञ्चविंशोऽग्निष्टोमो महाव्रतवान् महाव्रतस्तोत्रशस्त्रवान् स्तोत्रधर्माश्च पूर्ववत् । प्रथमश्चतुरात्रवत् । आग्रयणाग्रः । पशुकालेऽग्निष्ठप्रभृत्युत्तरत· पञ्चमे पौष्णं तथैव दक्षिणतः पञ्चमे मारुतम् । अथोपशयनिर्देश· । पत्नीसयाजान्तं पाक्षि(ष्ठि)कस्य षष्ठाहर्विकारः पत्नीसंयाजान्तं कृत्वा सवशनादयोऽहीनसंततयः ।

श्वोभूते विश्वजित्सर्वपृष्ठोऽतिरात्रः । ऐन्द्रवायवाग्र· । पशुकालेऽग्निष्ठप्रभृत्युत्तरतो बार्हस्पत्यं तथैव दक्षिणतो वारुणमुपशयनिर्देश·, तिरोअह्न्यं यज्ञपुच्छादिसर्वं द्वादशाहवदतिरात्रवत् । सौत्रामणी मैत्रावरुणी वा ॥ १६ ॥

**सप्तर्षीणामृद्धिकामः ॥ १७ ॥**

द्वितीयः सप्तर्षीणां सप्तरात्रः । सप्तर्षिणा सप्तरात्रेण यक्ष्ये स्वर्गार्थमिति संकल्पः । सर्वं पूर्ववत् । ( अहर्योगाविशेषः । ) ॥ १७ ॥

**पृष्ठ्यः षडहस्त्रयस्त्रिंशं महाव्रतमतिरात्रे ॥ १८ ॥**

पृष्ठ्यः षडहः समूढ । महाव्रतवानतिरात्रः महाव्रतस्तोत्रशस्त्रवान्, अतिरात्र इति । पूर्ववदनीका पशुक्लृप्तिश्च ॥ १८ ॥

प्राजापत्यस्तृतीयः प्रजाकामः ॥ १९ ॥

प्राजापत्येन सप्तरात्रेण यक्ष्ये प्रजार्थमिति संकल्प । सर्वं पूर्ववत् ॥ १९ ॥

पृष्ठ्यः षडहः प्राजापत्यस्त्रयस्त्रिंशं महाव्रतमतिरात्रे ॥ २० ॥

पृष्ठ्यः षडह प्राजापत्य महाव्रतमतिरात्रे, प्रजापतिना दृष्टमित्यर्थः । एवमहर्योगोऽस्मिन्महाव्रते तद्धर्माश्च सर्वेऽतिग्राह्या । प्राजापत्य· पशु । अनीका पशुक्लृप्तिश्च पूर्ववत् । ततः सौत्रामणी मैत्रावरुणी वा ॥ २० ॥

पृष्ठ्यावलम्बेन प्रतिष्ठाकामः । पृष्ठ्यः षडहः पृष्ठ्यावलम्ब्यस्त्रयस्त्रिंशं महाव्रतमतिरात्रे ॥ २१ ॥

पृष्ठ्यावलम्ब पञ्चम । पृष्ठ्यावलम्बेन सप्तरात्रेण यक्ष्ये, प्रतिष्ठार्थमन्नार्थं वेति । सप्तर्षीणा सप्तरात्रवत्सर्वम । अहर्योगविशेष·— पृष्ठ्यस्तोमा· ष हं षाडाहिकाः स्तोमा भवन्ति न साक्षाद्रूपादयो भवन्ति । रथंतरपृष्ठ पृष्ठ्य· षडहो महाव्रतवानतिरात्रो व्याख्यातः ॥ २१ ॥

छन्दोमपवमानेन पशुकामः । पृष्ठ्यः षडहश्छन्दोमपवमानं महाव्रतमतिरात्रे ॥ ( ख०२० ) ॥ २२ ॥

छन्दोमपवमानमिति कर्मनामधेयम । छन्दोमपवमानेन सप्तरात्रेण यक्ष्ये पश्वर्थमिति । सर्वं पूर्ववत् । अहर्योगविशेष —पृष्ठ्य षडहश्छन्दोपवमान महाव्रतमतिरात्रेऽतिरात्रे छन्दोमपवमानानि चतुर्विंशादियुक्त महाव्रतमतिरात्रसंस्था भवति । पूर्ववदनीका पशुक्लृप्तिश्च । केचित्केवलातिरात्रे छन्दोमपवमानं महाव्रतसाम भवति, इति ॥ २२ ॥

जनकः सप्तरात्रेण पुरुषकामः ॥ २३ ॥

अष्टमो जनकसप्तरात्र इति भाष्यकृत । सप्तरात्रेण यक्ष्ये स्वर्गं लोकमवाप्नवानीति प्रथमसप्तरात्रवत् ॥ २३ ॥

तस्य चत्वारि त्रिवृन्त्यहान्यग्निष्टोममुखानि । विश्वजिन्महाव्रतमतिरात्रे । ऐन्द्रेण सप्तरात्रेणा त्यन्या प्रजा भवति । ओजिष्ठो भवति । त्रिवृदग्निष्टोमः पञ्चदश उक्थ्यः । सप्तदश उक्थ्योऽभिजिदग्निष्टोमः । सर्वस्तोमोऽतिरात्रः ॥ २४ ॥

तस्य जनकसप्तरात्रस्य । अत्रायं विशेष — चत्वारि त्रिवृन्त्यहान्यग्निष्टोमः प्रथमो न नियतः । इतर उक्थ्याश्चतु षोडश्यन्तास्त्रिवृत्स्तोम. । षाष्ठिकाणां चतुर्णां महास्तोमानां विधिः । पृष्ठ्यवदतिग्राह्या. । पञ्चमे विश्वजित्स्तोमोऽपि पत्नीसंयाजान्तम् । महाव्रतस्तोत्रमतिग्राह्या भवन्ति । न प्राजापत्य पशु । ज्योतिष्टोमो वैश्वानरोऽतिरात्र. । आग्निकी पशुकल्पमिश्र पूर्ववत् । तत सौत्रामणी मैत्रावरुणी वा ॥ २४ ॥

अथाष्टरात्रोऽभिधीयते—

अष्टरात्रेण ब्रह्मवर्चसकामः । पृष्ठ्यः षडहः पञ्चविंशोऽग्निष्टोमो महाव्रतवान्विश्वजित्सर्वपृष्ठोऽतिरात्रः ॥ २५ ॥

उत्पत्तिविधिरप्ययम । 'य एव विद्वानष्टरात्रेण यजेत ब्रह्मवर्चस्येव भवति' ( तै० सं० ७–२–३ ) इत्याम्नात । अष्टरात्रेण यक्ष्ये ब्रह्मवर्चस्वी स्यामिति । सर्वं द्वादशाहवत् । औपवसथ्यान्त वसतीवरी. परिहृत्य प्रथमा विरामनं कृत्वा श्वोभूते त्रिवृदग्निष्टोमः । ऐन्द्रवायवाग्र. । अग्निष्टस्य दक्षिणत ऐन्द्र । पत्नीसंयाजान्तम् । श्वोभूते पञ्चदश उक्थ्यः । श्वोभूते सप्तदश उक्थ्य । श्वोभूत एकविंश. । अत्र षोडशी ऐन्द्रवायवाग्र । पशुकालेऽग्निष्टप्रभृत्युत्तरतस्तृतीये सारस्वम । पत्नीसंयाजान्तम् । श्वोभूते त्रिणव उक्थ्यः शुक्राग्र. षाष्ठिकेष्ठि कस्य पञ्चमः । पशुकालेऽग्निष्टप्रभृति दक्षिणतस्तृतीये सावित्र पत्नीसंयाजान्तम । श्वोभूत त्रयस्त्रिंश उक्थ्य आग्रयणाग्रः । अग्निष्टप्रभृत्युत्तरतश्चतुर्थे सौम्यं तथैव दक्षिणतश्चतुर्थे वैश्वदेवम् । पत्नीसंयाजान्तम् ।

श्वोभूते पञ्चविंशोऽग्निष्टोमो महाव्रतवान पूर्वमेव व्याख्यात । पशुकालेऽग्निष्टप्रभृत्युत्तरतः पञ्चमे पौष्णं दक्षिणतो वा पञ्चमे मारुत पत्नीसंयाजान्तम ।

श्वोभूते विश्वजित्सर्वपृष्ठोऽतिरात्र । पशुकाल उत्तरत षष्ठे बार्हस्पत्यं दक्षिणत. षष्ठे वारुणम् । षोडशी । चतुर्थी महारात्र इति वचनात्तत्र तिरोअह्न्यान्तं, यज्ञपुच्छादि पयस्यान्तमुदवसाय रोहिणी वत्सतरीमित्यादि सर्वस्वदान भवति । अहर्गणेषु चैतादृशमेतद्भवतीति च्छन्दोगकात्यायनयोर्वचनात ॥ २५ ॥

अथ नवरात्रोऽभिधीयते—

त्रयो नवरात्रा आयुष्कामो यजेत ॥ २६ ॥

नवरात्रेण यजते ( ७–२–४ ) इति ब्राह्मणार्थोऽनुसंधेय. ॥ २६ ॥

पृष्ठ्यः षडहो गौश्चाऽऽयुश्च द्वे अहनी विश्वजिदतिरात्रः ॥ २७ ॥

त्रिवृदग्निष्टोमः पृष्ठ्यः षडहस्य प्रथमः । ऐन्द्रवायवाग्रः । पशुकालेऽग्निष्ठ आग्नेयः । पत्नीसंयाजान्तमहीनसंततयः ।

श्वोभूते पञ्चदश उक्थ्यः शुक्राग्रः । उत्तरतो द्वितीय ऐन्द्रः पत्नीसंयाजान्तम् । श्वोभूते सप्तदश उक्थ्यः । आग्रयणाग्रः । पशुकाले दक्षिणतो द्वितीय ऐन्द्रः पत्नीसंयाजान्तमहीनसंततयः ।

श्वोभूत एकविंशः । अत्र षोडशी । ऐन्द्रवायवाग्र उत्तरतस्तृतीये सारस्वतं पत्नीसंयाजान्तम् ।

श्वोभूते त्रिणव उक्थ्यः । दक्षिणतस्तृतीये सावित्रं पत्नीसंयाजान्तम् । श्वोभूते त्रयस्त्रिंश उक्थ्यः । आग्रयणाग्रः । उत्तरतश्चतुर्थे सौम्यम् । पत्नीसंयाजान्तमध्वशनादिनियमा भवन्ति ।

श्वोभूत आयुरतिरात्र आग्रयणाग्र उत्तरतः षष्ठे बार्हस्पत्यम् । दक्षिणतः षष्ठे वारुणम् । सर्वत्रोपशयनिर्देशः । अहन्यहनि द्वादशशतं दक्षिणा । तिरोअह्न्यं यज्ञपुच्छादि सौत्रामणी मैत्रावरुणी वा ॥ २७ ॥

द्वितीयेन ब्रह्मवर्चसकामो ज्योतिर्गौरायुरुक्थ्यहोऽ-
भ्यासङ्ग्यः पञ्चाहो विश्वजिदतिरात्रः ॥ २८ ॥

अथ द्वितीयेन नवरात्रेण यक्ष्ये ब्रह्मवर्चसमवाप्नवानीति संकल्पः । सर्वं पूर्ववत् । अहर्योगविशेष —त्रिवृदग्निष्टोमः पञ्चदश उक्थ्यः सप्तदश उक्थ्य षा(क्षि)(र्षि)कोऽभ्यासङ्ग्यः पञ्चाहः प्रसिद्धः त्रिवृती द्वे सवने इत्यादिपञ्चाहे प्रथमेऽहनि षोडशी । अत्र पञ्चाहस्योऽन्यो नातिरात्रः । अस्मिन्नपि षोडशी । चतुर्थे चतुर्थ इति वचनाद्विश्वजिदतिरात्रः । अन्यत्पशुकल्पविशेषश्च पूर्ववत् ॥ २८ ॥

शर्लीपिशङ्गेन । यं कामं कामयेत तमभ्यश्नुते
ज्योतिर्गौरायुरुक्थ्यहो ज्योतिर्गौरायुरुक्थ्यह आयुर्गौ-
रायुरतिरात्रः ॥ ( ख० २१ ) ॥ २९ ॥

[illegible] । त्रिरात्र आवर्त्यमानो नवरात्र इति भाष्यकृत् । चतुर्विधेषु नवरात्रयागेष्विदानीमुच्यमानस्य शर्लीपिशङ्ग इत्येतन्नाम । शर्लीपिशङ्गस्तृतीयः । शर्लीपिशङ्गेन नवरात्रेण यक्ष्ये, अन्नाद्यर्थम् । द्वादशाहवदारम्भः । सत्र एवेति केचित् । [illegible] षड्विधः । काठकपक्षेऽप्येवम् । केचिद् द्वादशाहवद्दीक्षा-

१ क. ख. ग. °लवर्ली° ।

द्यौपवमध्यान्तमहर्योगविशेषः । ज्योतिर्गौरायुर्ज्योतिर्गौरायुरायुर्गौरायुरतिरात्र. । चतुर्थे षोडशिग्रहणमनीका पशुक्लृप्तिश्च पूर्ववत् । न पृष्ठ्य । पञ्चहन्यभिप्राप्यमेवैव केचि. दिच्छन्ति ।

अत्र केचिदेवं वर्णयन्ति—यत्र यत्र प्रणमध्ये गणत्वेन ज्योतिर्गौरायु पठ्यते तत्र ज्योतिर्गौरादिषु क्रतुपशूनेवेच्छन्ति । महाव्रते प्राजापत्य शिष्टत्वह मैकादशिनाना विधिरिति । तन्न । काम्यया एवाहीनानामुपदेशेन विहितत्वात् ॥ २९ ॥

अथ दशरात्रोऽभिधीयते—

चत्वारो दशरात्राः ॥ ३० ॥

भवन्तीति शेष । चत्वारो दशरात्रास्त्रिककुत् प्रथमो भवति । त्रिककुद दशरात्रेण यक्ष्ये, समानानामुत्तमो भूयासमिति । ब्रह्मवर्चसेन समानेन धर्मेण वा केचित्समुत्तरः । सर्वं द्वादशाहवत् ॥ ३० ॥

दशरात्राय दीक्षिष्यमाणो दशहोतारं जुहोति ॥ ३१ ॥

समहोतृकाले दशहोतारम् । जुहोतिचोदितत्वात्स्वाहाकारप्रदानो भवति ॥ ३१ ॥

भुवत इन्द्रस्य त्रिककुद्दशरात्रो यः कामयेत त्रिककुदेव समानानाꣳ स्यामिति । स एतेन यजेत ॥ ३२ ॥

विधास्यमानेषु दशस्वहःसु त्रयाणामह्नां वृत्त्यभेदेन त्रिककुत्स्थानीयत्वं संपाद्य प्रशंसति—'त्रिककुद्वा एष यज्ञो यद्दशरात्र ककुत्पञ्चदश ककुदेकविंश ककुत्त्रय-स्त्रिꣳशो य एवं विद्वान्दशरात्रेण यजते त्रिककुदेव समानानां भवति यजमान पञ्चदशो यजमान एकविꣳशो यजमानस्त्रयस्त्रिꣳश पुर इतरा' (तै० सं० ७।२।९) इति । त्रीणि ककुत् दशान्युन्नतस्तोमयुक्तान्यहानि यस्य दशरात्रस्य सोऽयं त्रिककुत् । किं तदुन्नतमहस्त्रयमिति । तदुच्यते—यः पञ्चदश उक्थ्यो द्वितीयमहस्तदेकं ककुत्स्थानीयम् । प्रथमतृतीययोस्त्रिवृदग्निष्टोमयोरह्नोर्नीचत्वम् ... । यथा वृषभस्य ककुद पुरोवर्ती गलभागः पश्चाद्वर्ती पृष्ठभागश्चेत्युभौ निम्नौ तद्वत् । तथैकविंश उक्थ्य पञ्चममहः । तदेकं ककुत्स्थानीयम् । चतुर्थषष्ठयो. सप्तदशोक्थ्ययोरूपयोरह्नोर्निम्नस्थानीयत्वात् । तथा त्रयस्त्रिंश उक्थ्योऽष्टममह । तदप्येकं ककुत्स्थानीयम् । त्रिणवाग्निष्टोमरूपयो सप्तमनवम-योरह्नोर्निम्नस्थानीयत्वात् । एवं महिमानमभिज्ञायानुष्ठाने यजमान समानानां मध्ये त्रिगु-णेनौन्नत्येन प्रजापशुधनादिकृतेन युक्तो भवति । य एते पञ्चदशैकविंशत्रयस्त्रिंशास्तत्स्था-नीयो यजमान इतरा अहस्थानीया प्रजा यजमानस्य पुरस्थानीया भवन्ति । यथा पुरं सर्वासा राजा स्वामी, एवमन्यासां प्रजानां यजमान. स्वामी भवतीत्यर्थ. ॥ ३२ ॥

त्रिवृदग्निष्टुदग्निष्टोमः । पञ्चदश उक्थ्यस्त्रिवृदग्निष्टोमः सप्तदशोऽग्निष्टोम एकविंश उक्थ्यः । सप्तदशोऽग्निष्टोमस्त्रिणवोऽग्निष्टोमस्त्रयस्त्रिंश उक्थ्यस्त्रिणवोऽग्निष्टोमः । विश्वजित्सर्वपृष्ठोऽतिरात्रः ॥ ३३ ॥

औपवसथ्यान्तं कृत्वा वसतीवरीं परिहृत्य पयसा विरामनं कृत्वा महारात्रे बुद्ध्वा त्रिवृदग्निष्टोमः षाडि(ष्ठि)कस्य प्रथमः । ऐन्द्रवायवाग्रः । पशुकाले अग्निष्ठ आग्नेयं पत्नीसंयाजान्तम् ।

श्वोभूते पञ्चदश उक्थ्यः । षाष्ठिकस्य द्वितीयः । शुक्राग्रः । अग्निष्ठस्योत्तरत ऐन्द्रः । पत्नीसंयाजान्तम् । श्वोभूते त्रिवृदग्निष्टोमः । षाष्ठिकस्य तृतीयः । आग्रयणाग्रः । अग्निष्ठस्य दक्षिणत ऐन्द्रः । पत्नीसंयाजान्तम् ।

श्वोभूते सप्तदशोऽग्निष्टोमः षाडि(ष्ठि)कस्य चतुर्थः । अत्र षोडशी । पशुकाल उत्तरतस्तृतीये सारस्वतम् । पत्नीसंयाजान्तम् ।

श्वोभूत एकविंश उक्थ्यः । षाडि(ष्ठि)कस्य पञ्चमः शुक्राग्रः । दक्षिणस्तृतीये सावित्रम् । पत्नीसंयाजान्तम् ।

श्वोभूते सप्तदशोऽग्निष्टोमः । षाष्ठिकस्य षष्ठ आग्रयणाग्रः । उत्तरतश्चतुर्थे सौम्यम् । पत्नीसंयाजान्तं सत्वशनादि ।

श्वोभूते त्रिणवोऽग्निष्टोमः । छन्दोमानां प्रथमविकारः ऐन्द्रवायवाग्रः । दक्षिणतश्चतुर्थे वैश्वदेवम् । पत्नीसंयाजान्तम् ।

श्वोभूते त्रयस्त्रिंश उक्थ्यः । छन्दोमानां द्वितीयः शुक्राग्रः । अत्र षोडश्युक्थ्यवदेव क्रतुकरणमुत्तरतः पञ्चमे पौष्णम् । पत्नीसंयाजान्तम् ।

श्वोभूते त्रिणवोऽग्निष्टोमश्छन्दोमानां तृतीय आग्रयणाग्रः । दक्षिणतः पञ्चमे मारुतम् । पत्नीसंयाजान्तमहीनसंततयः । विश्वजित्सर्वपृष्ठोऽतिरात्रो व्याख्यातः । अविवाक्यधर्माः प्रवर्तन्ते । उत्तरेण ( उत्तरतो ) षष्ठे बार्हस्पत्यम् । दक्षिणतः षष्ठे वारुणम् । यज्ञपुच्छादि सर्वं द्वादशाहवत् । पयस्यान्तमुक्तो दशरात्रः । प्रजार्थं पापक्षयार्थं च तैत्तिरीयश्रुत्यभिप्रायेण ॥ ३३ ॥

पुर इतरा अभिचर्यमाणो यजेत । त्रिवृदग्निष्टोमो ज्योतिरग्निष्टोमस्त्रिवृदग्निष्टोमो ज्योतिरुक्थ्यो गौरुक्थ्य आयुरुक्थ्योऽभिजिदग्निष्टोमो विश्वजिदग्निष्टोमः सर्वजिदग्निष्टोमः सर्वस्तोमोऽतिरात्रः ॥ ३४ ॥

गतः । पुर इतरा अभिचर्यमाण इति । देवपुराऽतिरात्रेण यक्ष्ये, अभिचारपरिहारार्थम् । पूर्ववत् । अहर्योगविशेष—त्रिवृदग्निष्टोम पाक्षि(ष्ठि)कस्य प्रथमज्योतिरुक्थ्यः । त्रिकद्रुकाणां प्रथमो ज्योतिरुक्थ्य । पुनश्च त्रिवृदग्निष्टोमोऽग्निष्टोम । पाक्षि(ष्ठि)कस्य तृतीयः । तथैवातिग्राह्याः । अथाभिजिदग्निष्टोम । अभिजिदेकाह. । अत्र षोडशी । अग्निष्टोमवत् क्रतुकरणम् । अथ गौरुक्थ्य । त्रिकद्रुकाणा द्वितीय । अथाभिजिदग्निष्टोमः । अथ विश्वजिदग्निष्टोमः । आयुरुक्थ्यः । अत्र न षोडशी । विश्वजिदग्निष्टोमः सर्वस्तोमोऽतिरात्र एकाहः पृश्निप्राणग्रहाद्यविवाक्यधर्मान्केचिदिच्छन्ति ।

अथवाऽनुष्टुभमश्वरन्तीति तिरोअह्नान्तम् । पत्नीसंयाजोत्तरकालं मानम इति केचित् । केचिदत्र मानमं नेच्छन्ति । सुब्रह्मण्यान्ते ब्रह्मप्रतिष्ठित्यादिना प्रायश्चित्तम् । अवभृथादि समानं कर्म पयस्यायाः । अनीका पशुक्लृप्तिश्च पूर्ववत् ।

भ्रातृव्यवतश्चैष दशरात्र उक्त. । अह क्लृप्तिश्छन्दोग आम्नाता । तैत्तिरीयाणामह.क्लृप्तिस्त्रिवृदग्निष्टोमोऽग्निष्टुदाग्नेयीषु भवति ( तै० सं० ७–२–९ ) इत्यादि । आग्नेयीषु साम स्तुवते । पञ्चदश उक्थ्य. । ऐन्द्रीषु स्तुवते । इन्द्रस्तुतो विकार: । त्रिवृदग्निष्टोमो वैश्वदेवीषु वैश्वदेवस्तुतो विकार । षडहस्याहर्विकाराणामविरोधेन । सप्तदशोऽग्निष्टोमः प्राजापत्यासु तीव्रसोमसर्वेश्वदक्षि कार । प्राजापत्यास्वृतु स्तवनम् । अत्र षोडशी । एकविंश उक्थ्यः सौरीषु सूर्यस्तुतो विकारः । सप्तदशोऽग्निष्टोम प्राजापत्यासूपहव्य । उपहव्यस्य विकारः । उपहव्यो नाम कश्चिदेकाहविशेष. । त्रिणवावग्निष्टोमावभित ऐन्द्रीषु । इन्द्रस्तुतो विकार. । तयोर्मध्ये विकार वैश्वदेवस्त्रयस्त्रिंश उक्थ्या वैश्वदेवस्तुत् । अत्र षोडशी । तेषा क्रमः—त्रिणवमग्निष्टोमं कृत्वा इन्द्रस्तुत कृत्वा वैश्वदेवमुक्थ्यषोडशिमन्तं कृत्वा पुनश्च त्रिणवमग्निष्टोममिन्द्रस्तुत विश्वजित्सर्वपृष्ठोऽतिरात्रो दशममहर्विकार । नारम्भोऽहरहरुपशयश्च । अत्राय [illegible] । उत्तमवर्जं सर्वाणि पत्नीसंयाजान्तानि ।

एवमहःक्लृप्ति । अस्यामङ्गः ( ज्य ) पञ्चाह, चत्वारश्छन्दो( मा ) महाव्रतं विश्वजित्सर्वपृष्ठोऽतिरात्रश्छन्दोमाना प्रथम मध्वशनादिनियमात् । चतुर्थो नामधेयादविवाक्यधर्मा महाव्रतं न मांनाय्यमुभयत्रातिरात्रः प्रथममुभयक्लृप्तौ चतुर्थोऽपि पोडशिरात्रप्रभृत्युपारिष्टादतिरात्रेषु एकादशरात्रपर्यन्तेषु अत्यदि( ति )रात्रेषु षोडशी नियत इति कैश्चिद्विकल्पेन व्याख्यातं तन्न युक्त सूत्रविरोधाच्च । अतिरात्रः । तिरोअह्नान्तं कृत्वा यज्ञपुच्छादि सर्वं द्वादशाहवत् ॥ २४ ॥

**कौसुरुविन्दो दशरात्रः । यः कामयेत सर्वमिदं भवेयमिति । स एतेन यजेत । तस्य त्रयस्त्रिवृ-**

तोऽग्निष्टोमास्त्रयः पञ्चदशा उक्थ्याः । त्रयः सप्तदशा उक्थ्या अतिरात्रः ॥ ३५ ॥

गत ॥ ३५ ॥

अथैकादशरात्रोऽभिधीयते––

पौण्डरीक एकादशरात्रः । अयुतं दक्षिणा । अश्वसहस्रमेकं । दश दक्षिणाः । सर्वामृद्धिमृध्नोति । परमेष्ठितां गच्छति । अभ्यासङ्ग( ङ्ग्यः ) पञ्चाहः षडहः स्यादहस्त्रयस्त्रिंशं द्व सवने षट्त्रिंशत्सन्त्यश्चतुष्टोमोऽग्निष्टोमस्त्रय**ऋ**छन्दोमा विश्वजित्सर्वपृष्ठोऽतिरात्रः । अन्वहं दश सहस्राणि दद्यात् । अश्वसहस्रमुत्तमेऽहन्यश्वसहस्रमुत्तमेऽहनि ॥ (ख० २२)॥३६॥

इति सत्याषाढहिरण्यकेशि सूत्रे सप्तदशप्रश्नेऽष्टमः पटलः ।

इति सत्याषाढहिरण्यकेशिसूत्रे सप्तदशप्रश्नः ।

पौण्डरीक इति । अस्य चैकादशरात्रस्य सत्रलक्षणभूतयाऽपि चोदनया विधानात्सत्रत्व द्रष्टव्यम । तत्रात सा याना षड्रात्र इव धर्मातिदेशार्थेयमासि(मस्ति) चोदना । तद्व्रत्यातिदेश्याना धर्मविशेषाणामाश्रयणात् । ऋतवो वै प्रजाकामाः ( तै० सं० ७–२–६ ) इति [illegible] सत्रम् । इतोऽन्ये शाखान्तरविहिता एकादशरात्रा अहीना ।

' एतस्मिन्नुत्तामेकादशरात्रे प्रथममहर्विधत्ते–ज्योतिरतिरात्रो भवति ' (७–२–६) इति । पूर्व ज्योतिर्गौरायुरिति ज्योति शब्दाभिधेयो य एकाह उक्तस्तमेकाहमत्रातिरात्रसंस्थारूप कुर्यात । अथ द्वितीयादिसप्तमान्तान्यहानि विधत्ते—' पृष्ठ्यः षडहो भवति' ( ७––२–– ६ ) इति । द्वादशाहे द्वितीयदिनमारभ्य सप्तमान्तेषु दिनेषु रथंतरादिभिः षड्भि पृष्ठैर्युक्तानि षडहानि विहितानि । तानि चास्माभिः साध्याना षड्रात्रप्रसङ्गेनोदाहृतानि । तेषा संघ पृष्ठ्य षडह । सोऽत्र कर्तव्य । चतुर्विंशस्तोमयुक्तो रथंतरसामा य उक्थ्य [illegible] । चतुश्चत्वारिंशस्तोमयुक्तो बृहद्रथंतरसामा य उक्थ्य सोऽयमत्र नवममह । अष्टाचत्वारिंशस्तोमयुक्तो बृहत्सामा य उक्थ्यः सोऽयमत्र दशममह । एकोनत्रिंशस्तोमयुक्तो योऽयमतिरात्र एकाहविशेषः, सोऽयमत्रैकादशमह ।

त्रयत पौण्डरीके नियतम् । द्वादशाहीनस्य दशरात्रस्य प्रथमाहर्येस्त्रिवृद्धर्मः पौण्डरीके, द्वयोरह्नोरादितः प्रवृत्तिरतिग्राह्यादिषु प्रयोजनम् । तदा विश्वजिदतिरात्रे मानसादि

सूत्रकारेण द्वादशरात्रे, [illegible] इत्यनीकप्रकारेण उक्तः । द्वादशाहधर्मः स्वर्गफलश्च । तत्र श्लोकौ—

चत्वारिंशदहीनाश्च सूत्रकारेण चोदिताः ।
षट्त्रिंशत्तिर्यकेऽर्वीनाः शिष्टाश्छन्दोगदर्शिताः ॥
व्यनीक(काया)विधिश्चाय वाचक परिकल्प्यते ।
इति. सूत्रकारेण पौण्डरीकविधिस्तत. ॥

व्याख्यानमन्यत् । अश्वसहस्रमुत्तमेऽहनीति द्विरुक्तिः प्रश्नसमाप्त्यर्था ॥ ३६ ॥

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवशास्त्रिसंकलितायां प्रयोगचन्द्रिकायां सप्तदशप्रश्नेऽष्टमः पटलः ।

---

प्रयोगवैजयन्त्याख्ये मालाया सूत्रसंस्थिते ।
एकाहस्येह कृतो निर्णयः कौस्तुभो मणिः ॥
सत्यगो यज्ञवपुषस्तुष्टयेऽस्तु मयाऽर्पितः ।
गृह्णाति हि किमप्येष भक्त्यैवाप्युत्तमं कृतम् ॥

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवशास्त्रिसंकलितायां प्रयोगचन्द्रिकायां सप्तदशप्रश्नः । समाप्तः ।

---

अथाष्टादशप्रश्ने प्रथमः पटलः

---

उक्ता अहीना इदानीं सत्राण्यभिधीयन्ते—

**द्वादशाहप्रजादीनि सत्राणि ॥ १ ॥**

द्वादशरात्रादीनि सत्राणि ( का० श्रौ० २४–१ ) इति कात्यायनः । रात्रिसत्राणीति नाम । तच्च द्वादशरात्रप्रभृतीनाम् । पूर्वपदप्रधानोऽयं बहुव्रीहिः । ननु ऋद्धिकामाः सत्रमासीरन् ( जै० सू० ६–६–२ ) इत्यत्र विप्रा इति विशेषो न श्रूयते । तस्माद्वर्णत्रयस्य सत्राधिकार इति चेन्नैवम् । विप्राणामार्त्विज्यमिति परिभाषायां व्याख्यातम् । ऋत्विक्कार्ये यजमानाः सत्रे समाम्नाताः ' ये यजमानास्त ऋत्विजः ' इति । तस्माद्विप्राणामेव सत्रम् ॥ १ ॥

**यानि पुरस्तात्संवत्सराद्गवामयनप्रकृतीन्युत्तराण्युभयतोतिरात्राणि सत्राणि ॥ २ ॥**

